॥ श्रीकृष्णचरितम् ॥

केतुमालवासिन ऊचुः -
आसीत्तु शेषशयनो जगदार्त्तिहारी
    साक्षात्प्रधानपुरुषेश्वर आदिदेवः ।
यः प्रार्थितः सुरवरैर्भुवनावनाय
    तस्मै नमो भगवते पुरुषोत्तमाय ॥ १॥

जातो गतः पितृगृहात्पितरौ विमोक्ष्य
    नन्दालयं शिशुतनुः स तु नन्दपत्न्या ।
संलालितः सघृणया बहुमङ्गलश्रीः
    प्राणप्रहारमकरोत्किल पूतनायाः ॥ २॥

बालो बभञ्ज शकटं शयनं प्रकुर्वन्
    दैत्यं निपात्य महदद्भुतकं च पृष्ठे ।
मात्रे प्रदर्श्य निजरूपमलङ्कृतोऽभूद्-
    गर्गेण सङ्कथितसुन्दरभाग्यलक्ष्मीः ॥ ३॥

संलालितो व्रजजनैर्नवनीतचौरः
    श्यामो मनोहरवपुर्मृदुलः स बालः ।
भित्वा जघास दधिपात्रमतीव दध्नो
    वृक्षौ बभञ्ज जननीलघुदामबद्धः ॥ ४॥

वृन्दावने स विचरन् सह वत्सगोपै-
    र्वत्सासुरं च विनिपात्य कपित्थवृक्षैः ।
सद्यो विगृह्य खरतुण्डपुटे च दोर्भ्यां
    दैत्यं ददार स बकं तृणवत्तटिन्याम् ॥ ५॥

सन्धारयंश्च शिशुभिर्बहुवत्ससङ्घान्
    वेणुं क्वणन्मदनमोहनवेषभृद्यः ।
गोपानघासुरमुखे प्रहिताञ्जुगोप
    गोगोपवत्सपवपुः स चकार सद्यः ॥ ६॥

क्षेत्रज्ञ आत्मपुरुषो भगवाननन्तः
    पूर्णः प्रधानपुरुषेश्वर आदिदेवः ।
धृत्वा वपुः स विहरन्व्रजबालकेषु
    सम्मोहयन्विधिमजो विचचार कृष्णः ॥ ७॥

चिक्षेप धेनुकमसौ बलिनं बलेन
    ताले प्रगृह्य सहसा फणिकालियाख्यम् ।
बभ्राम वह्निमपिबद्दनुजं प्रलम्बं
    सद्यो जघान स बली दृढमुष्टिना च ॥ ८॥

सञ्चारयन्व्रजवधूर्मधुरं क्वणन् यो
    वेणुं वने व्रजवधूनिजगीतकीर्तिः ।
दिव्याम्बराणि स जहार वराङ्गनानां
    विप्राङ्गनाभिरभितः कृतभक्तभोजः ॥ ९॥

देवे च वर्षति पशून्कृपया रिरक्षु-
    र्गोवर्धनं प्रकृतबाल इवोच्छिलीन्ध्रम् ।
बिभ्रद्गिरिं स गजराडिव कञ्जमेक-
    हस्ते शचीपतिवचोभिरतः स्तुतोऽभूत् ॥ १०॥

नन्दं जुगोप वरुणात्स्वजनाय लोकं
    दिव्यं परं च तमसो दिवि दर्शयित्वा ।
श्रीरासमण्डलगतो व्रजसुन्दरीणां
    रेमे पुलिन्दतटिनीपुलिनेऽङ्गनाभिः ॥ ११॥

मानं हरन्मदनयौवनमानिनीना-
    मन्तर्दधे व्रजवधूनिजगीतकीर्तिः ।
स्रग्वी मनोहरवपुर्विरहातुराणां
    साक्षाद्धरिर्मदनमोहन आविरासीत् ॥ १२॥

वृन्दावने शबरराजवराङ्गनाभि-
    र्विष्णुर्विभूतिभिरिव द्युभिरादिदेवः ।
रेमे स्तुतः सुरवरैः स च रासरङ्गे
    केयूरकुण्डलकिरीटविटङ्कवेषः ॥ १३॥

नन्दं विमोक्ष्य फणिने प्रददौ च मोक्षं
    दिव्यं मणिं स च जहार ह शङ्खचूडात् ।
गोपस्तुतो वृषभरूपधरं ह्यरिष्टं
    भूमौ निपात्य निजघान करेण शृङ्गे ॥ १४॥

कंसः परं भयमवाप च तेन केशी
    सम्प्रेषितः सघनमेघवपुः प्रचण्डः ।
उत्सृज्य तं च तरसा पुनरापतन्तं

श्रीबाहुना मुखगतेन जघान कृष्णः ॥ १५॥

यो नारदेन बहुवर्णितभाग्यलक्ष्मी-
व्योमासुरो व्यसुरकारि परेण येन ।
अक्रूरवर्णितमहोदय आदिदेवो
गोपीजनातिविरहातुरचित्तचौरः ॥ १६॥

श्वाफल्कये हितकराय निजं स्वरूप-
मन्तर्दधे जलचये स च दर्शयित्वा ।
स प्राप तत्र मथुरोपवनं परेशो
गोपालकैश्च सबलो मथुरां ददर्श ॥ १७॥

स्वैरं चरन्मधुपुरे रजकं निकृत्य
कृष्णः प्रदाय च वरानथ वायकाय ।
मालाकृतं समनुकम्प्य चकार कुब्जा-
मृज्वीं धनुश्च सहसा नमयन्बभञ्ज ॥ १८॥

द्वारि द्विपञ्च विनिहत्य नरेन्द्रमल्लौ
हत्वा प्रगृह्य विनिपात्य स रङ्गभूमौ ।
कंसं हरिस्तु पितरावथ मोचयित्वा
बन्धान्नृपं पुरि चकार महोग्रसेनम् ॥ १९॥

नन्दं प्रसाद्य बहुदानकरो यदूंस्ता-
नाहूय तर्प्य सुधनैश्च निवेदयित्वा ।
विद्यामधीत्य स ददौ प्रमृतं ह्यपत्यं
कृत्वा वधं दनुजपञ्चजनस्य कृष्णः ॥ २०॥

गोपीजनान्समनुगृह्य स चोद्धवेना-
क्रूरेण हास्तिनपुरे त्वथ पाण्डुपुत्रान् ।
कृष्णो विजित्य बलिनं च जरासुतं च
भस्मीचकार मुचकुन्ददृशाऽऽत्मकालम् ॥ २१॥

निर्माय चाद्भुतपुरं स्थितयेऽत्र कृष्णो
निन्ये च कुण्डिनपुरात्किल भीष्मकन्याम् ।
पुत्रेण शम्बरमरिं निजघान चादाद्-
राज्ञे मणीं युधि विजित्य स ऋक्षराजम् ॥ २२॥

भामापतिः स च शिरः शतधन्वनस्तु

हृत्वा ह्युवाह सवितुश्च सुतां परेशः ।
आवन्त्यराजतनुजां स जहार कृष्णः
सत्यां स्वयंवरगृहे वृषभान्दमित्वा ॥ २३॥

कैकेयराजतनुजां स जहार भद्रां
श्रीलक्ष्मणामखिलभद्रपतेः सुतां च ।
भौमं विजित्य सबलं युधि शस्त्रसङ्घै-
र्निन्ये च षोडशसहस्रवराङ्गनाश्च ॥ २४॥

भामेच्छया सुरतरुं च सभां सुधर्मां
शक्रं विजित्य स जहार कलत्रमित्रः ।
यो रुक्मिणं च निजघान बलेन गोष्ठ्यां
बाणस्य बाहुनिचयं शतधाच्छिनत्सः ॥ २५॥

तेनोग्रसेनक्रतवेऽथ जगद्विजेतुं
सम्प्रेषितो निजसुतः किल शम्बरारिः ।
योऽत्रागतो भुवि विजित्य नृपान्समस्तान्
श्रीकेतुमालपतये च नमोऽस्तु तस्मै ॥ २६॥

इति गर्गसंहितायां विश्वजित्खण्डे एकत्रिंशाध्यायान्तर्गतं
केतुमालवासिभिः प्रद्युम्नस्य पुरतः गीतं श्रीकृष्णचरितं सम्पूर्णम् ।